॥ दशश्लोकीस्तुती साम्बस्तुतिः अथवा साम्बदशकम् ॥

साम्बो नः कुलदैवतं पशुपते साम्ब त्वदीया वयं
साम्बं स्तौमि सुरासुरोरगगणाः साम्बेन संतारिताः ।
साम्बायास्तु नमो मया विरचितं साम्बात्परं नो भजे
साम्बस्यानुचरोऽस्म्यहं मम रतिः साम्बे परब्रह्मणि ॥ १॥

विष्ण्वाद्याश्च पुरत्रयं सुरगणा जेतुं न शक्ताः स्वयं
यं शंभुं भगवन्वयं तु पशवोऽस्माकं त्वमेवेश्वरः ।
स्वस्वस्थाननियोजिताः सुमनसः स्वस्था बभूवुस्तत-
स्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ २॥

क्षोणी यस्य रथो रथाङ्गयुगलं चन्द्रार्कबिम्बद्वयं
कोदण्डः कनकाचलो हरिरभूद्बाणो विधिः सारथिः ।
तूणीरो जलधिर्हयाः श्रुतिचयो मौर्वी भुजङ्गाधिप-
स्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ३॥

येनापादितमङ्गजाङ्गभसितं दिव्याङ्गरागैः समं
येन स्वीकृतमब्जसंभवशिरः सौवर्णपात्रैः समम् ।
येनाङ्गीकृतमच्युतस्य नयनं पूजारविन्दैः समं
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ४॥

गोविन्दादधिकं न दैवतमिति प्रोच्चार्य हस्तावुभा-
वुद्धृत्याथ शिवस्य संनिधिगतो व्यासो मुनीनां वरः ।
यस्य स्तम्भितपाणिरानतिकृता नन्दीश्वरेणाभव-
त्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ५॥

आकाशश्चिकुरायते दशदिशाभोगो दुकूलायते
शीतांशुः प्रसवायते स्थिरतरानन्दः स्वरूपायते ।
वेदान्तो निलयायते सुविनयो यस्य स्वभावायते
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ६॥

विष्णुर्यस्य सहस्रनामनियमादम्भोरुहाण्यर्चय-
न्नेकोनोपचितेषु नेत्रकमलं नैजं पदाब्जद्वये ।
सम्पूज्यासुरसंहतिं विदलयंस्त्रैलोक्यपालोऽभव-
त्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ७॥

शौरिं सत्यगिरं वराहवपुषं पादाम्बुजादर्शने

चक्रे यो दयया समस्तजगतां नाथं शिरोदर्शने ।
मिथ्यावाचमपूज्यमेव सततं हंसस्वरूपं विधिं
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ८॥

यस्यासन्धरणीजलाग्निपवनव्योमार्कचन्द्रादयो
विख्यातास्तनवोऽष्टधा परिणता नान्यत्ततो वर्तते ।
ओंकारार्थविवेचनी श्रुतिरियं चाचष्ट तुर्यं शिवं
तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ ९॥

विष्णुब्रह्मसुराधिपप्रभृतयः सर्वेऽपि देवा यदा
संभूताज्जलधेर्विषात्परिभवं प्राप्तास्तदा सत्वरम् ।
तानार्ताञ्शरणागतानिति सुरान्योऽरक्षदर्धक्षणा-
त्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ १०॥

इति श्रीमत्परमहंसपरिव्रजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवत्पाद कृतौ
दशश्लोकीस्तुतिः सम्पूर्णा ॥